## प्रशस्तपादभाष्यम्

**मानेन वर्षशतान्ते वर्त्तमानस्य ब्रह्मणोऽपवर्गकाले संसारखिन्नानां सर्वप्राणिनां निशि विश्रामार्थं सकलभुवनपतेर्महेश्वरस्य सञ्जिहीर्षासमकालं**

ब्रह्मा के मोक्ष का समय होता है, उस समय कुछ काल तक प्राणियों के (जन्म मृत्यु जनित) खेद को मिटाने के लिये सभी भुवनों के अधिपति महेश्वर को संहार

## न्यायकन्दली

**रेतयोरुपवर्णनात् । महाभूतानामित्युक्ते त्रयाणामेव परिग्रहः, कपिञ्जलानालभेतेतिवद् बहुत्वसंख्यायास्तावत्येव चरितार्थत्वात्, अतश्चतुर्णामित्युक्तम् । चतुर्णामित्युक्ते चानन्तरोक्तमेव वायुकार्य्यं शरीरमिन्द्रियं विषयः प्राण इति चतुष्टयं बुद्धौ निविशते, तन्निवृत्त्यर्थं महाभूतानामिति । नन्वेवं तर्हि द्व्यणुकानामुत्पत्तिविनाशौ न प्रतिज्ञातौ स्यातां तेषामणुत्वात् । नैवम्, विधिशब्दोपादानात् । येन प्रकारेण महाभूतानामुत्पत्तिविनाशौ स प्रकारः कथ्यत इत्युक्तम् । तेषाञ्च द्व्यणुकादिप्रक्रमेणोत्पत्तिरापरमाण्वन्तश्च विनाश इति । अतो द्व्यणुकानामपि सृष्टिसंहारौ प्रतिज्ञातौ स्याताम्, अर्थप्रतिपादनमात्रस्य विवक्षितत्वात् ।**

है, फिर भी यह चारों का साधर्म्य कथन नहीं है; क्योंकि पृथिव्यादि में से प्रत्येक की सृष्टि और संहार का वर्णन अलग-अलग है। 'महाभूतानाम्' केवल इतना कहने से तीन महाभूतों का ही बोध होता, क्योंकि 'कपिञ्जलान्[1] आलभेत' इत्यादि वाक्यों के बहुवचनान्त 'कपिञ्जलान्' आदि पदों से त्रित्व का ही बोध होता है, बहुत्व संख्या उतने से भी चरितार्थ हो जाती है, अतः 'चतुर्णाम्' यह पद कहा है। केवल 'चतुर्णाम्' इतना भर कह देने से अव्यवहित पहिले कहे हुये वायु के (शरीर, इन्द्रिय, विषय और प्राण रूप) चारों भेद ही जल्दी से बुद्धि में आते हैं, उनको हटाने के लिये 'महाभूतानाम्' यह पद है। (प्र०) तो फिर इससे द्व्यणुकों की उत्पत्ति और उनका विनाश इस प्रतिज्ञा के अन्दर नहीं आते हैं, क्योंकि वे अणु हैं (महान् नहीं)। (उ०) नहीं, क्योंकि 'विधि' शब्द का उपादान है। (अर्थात्) जिस प्रकार महाभूतों की उत्पत्ति और विनाश होता है, वह प्रकार कहते हैं। उनकी उत्पत्ति द्व्यणुकादिक्रम से ही होती है और विनाश भी परमाणु पर्यन्त होता है, अतः द्व्यणुकों की उत्पत्ति और विनाश भी उक्त प्रतिज्ञा के अन्दर आ जाते हैं।

---

१. श्रुति में 'वसन्ताय कपिञ्जलान् आलभेत' यह वाक्य है। इस वाक्य में प्रयुक्त 'कपिञ्जलान्' इस पद से तीन ही कपिञ्जल अभिप्रेत हैं, या तीन से लेकर आगे की संख्या में यथेच्छाचार है? क्योंकि बहुत्व तो तीन से लेकर आगे की सभी संख्याओं में समान है। इसी संशय के समाधान में कहा है कि तीन ही कपिञ्जलों का

## न्यायकन्दली

पश्चादुक्तमपि संहारं प्रथमं कथयति—ब्राह्मेण मानेनेति। अस्माकं पञ्चदश निमेषाः काष्ठा। त्रिंशतिः काष्ठाः कला। पञ्चदश कला नाड़िका। त्रिंशत्कलो मुहूर्त्तः। त्रिंशता मुहूर्त्तै रहोरात्रः। पञ्चदशाहोरात्राः पक्षः। द्वौ पक्षौ मासः। द्वौ मासावृतुः। षड्ऋतवो द्वादश मासाः संवत्सरः। ऋतुत्रयेणोत्तरायणम्, ऋतुत्रयेण च दक्षिणायनम्। उत्तरायणञ्च देवानां दिनम्, दक्षिणायनञ्च देवानां रात्रिः।

जिस किसी प्रकार पदार्थों का प्रतिपादन मात्र ही इष्ट है, अतः पीछे कहे हुये भी संहार को "ब्राह्मेण मानेन' इत्यादि से पहिले कहते हैं। हम लोगों के १५ निमेषों की एक काष्ठा होती है। ३० काष्ठाओं की एक कला और १५ कलाओं की एक नाड़िका होती है। ३० कलाओं का एक मुहूर्त्त होता है। ३० मुहूर्त्तों से एक दिन और एक रात होती है। १५ अहोरात्रों का एक पक्ष होता है। दो पक्षों का एक मास और दो मासों की एक ऋतु होती है। छः ऋतु एवं बारह मासों का एक वर्ष होता है। मकर राशि में जब सूर्य आते हैं तब से लेकर मिथुन राशि में उनकी स्थिति पर्यन्त के शिशिर, वसन्त और ग्रीष्म इन तीन ऋतुओं का एक उत्तरायण होता है। एवं कर्क राशि में सूर्य की स्थिति से लेकर धनु राशि में उनकी स्थिति पर्यन्त के वर्षा, शरद् और हेमन्त इन तीन ऋतुओं का दक्षिणायन होता है। उत्तरायण देवताओं का दिन है,

---

आलम्भन युक्त है, क्योंकि त्रित्व संख्या के ग्रहण से ही शास्त्रकृत्य सम्पन्न हो जाता है। एवं तीन संख्या से अधिक संख्या को ग्रहण करने पर भी त्रित्व को छोड़ा नहीं जा सकता, क्योंकि चतुष्ट्वादि के अन्दर त्रित्व अवश्य ही है। जो कोई त्रित्व को ग्रहण करेगा वह चतुष्ट्वादि को छोड़ सकता है, क्योंकि चतुष्ट्वादि त्रित्व के अन्दर नहीं है, अतः उनके लिये त्रित्व को छोड़ना असम्भव है। त्रित्व सब से पहिले उपस्थित है, एवं उसके ग्रहण में लाघव भी है। तस्मात् त्रित्व संख्या के ग्रहण से ही शास्त्रकृत्य सम्पन्न हो जाता है, फिर उससे अधिक कपिञ्जल के वध से तो प्रत्यवाय ही होगा। तस्मात् विना विशेषण के बहुवचन का अर्थ त्रित्व ही है। (मीमांसासूत्र अ. ११ पा. १ अधि. ८)

१. प्रतिज्ञावाक्य के विरुद्ध इस उलटफेर को किरणावली में इस प्रकार सुलझाया गया है कि—सृष्टि और संहार इन दोनों में पहिले कौन ? इस विप्रतिपत्ति में वैशेषिकों का सिद्धान्त है कि कोई भी पहिले नहीं, क्योंकि संसार अनादि और अनन्त है। प्रत्येक सृष्टि के पहिले अनन्त संहार बीत चुके हैं, एवं हर एक संहार के पहिले अनन्त सृष्टियां बीत चुकी रहती हैं। इस विषय की सूचना देने के लिये ही प्रतिज्ञावाक्य में पीछे कथित भी संहार का 'ब्राह्मेण मानेन' इत्यादि से पहिले प्रतिपादन करते हैं। देखिये किरणावली—(पृ० ८९ पं० १९ और पृ० ९० पं० ३)।

## प्रशस्तपादभाष्यम्

**शरीरेन्द्रियमहाभूतोपनिबन्धकानां सर्वात्मगतानामदृष्टानां वृत्तिनिरोधे**

की इच्छा होती है। उसके बाद ही शरीर, इन्द्रिय, एवं/और सभी महाभूतों के उत्पादक सभी आत्माओं के सभी अदृष्टों के कार्यों के उत्पन्न करने की शक्ति

## न्यायकन्दली

तथाभूताहोरात्रशतत्रयेण षष्टयधिकेन वर्षम्। द्वादशसहस्त्रैश्च वर्षैश्चतुर्युगम्। चतुर्युगसहस्रेण ब्रह्मणो दिनमेकम्।

इत्यनेन मानेन वर्षशतस्यान्तेऽवसाने, वर्त्तमानस्य ब्रह्मणोऽपवर्गकाले मुक्तिकाले, संसारे नानास्थानेषु भूयो भूयः शरीरादिपरिग्रहेण, खिन्नानां गर्भवासादिविविधदुःखेन दुःखितानां प्राणिनाम्, निशि विश्रामार्थं कियत्कालं दुःखोपशमार्थम्, सकलभुवनपतेः सर्वत्राव्याहतप्रभावस्य, महेश्वरस्य सञ्जिहीर्षा संहारेच्छा भवति। तत्समानकालं तदनन्तरं शरीरेन्द्रियमहाभूतोपनिबन्धकानां शरीरेन्द्रियमहाभूतारम्भकाणां सर्वात्मगतानां सर्वेष्वात्मसु समवेतानामदृष्टानां वृत्तिनिरोधः शक्तिप्रतिबन्धः स्यात्। तस्मिन् सत्यनागतानां शरीरेन्द्रियमहाभूतानामनुत्पत्तिः। उत्पन्नानाञ्च विनाशार्थं महेश्वरेच्छात्माणुसंयोगेभ्यः कर्म्माणि जायन्ते। महेश्वरेच्छा सञ्जिहीर्षालक्षणा। अण्विति परमाणुपरिग्रहः। महेश्वरस्येच्छा चात्माणु-

एवं दक्षिणायन उनकी रात है। इस प्रकार के ३६० अहोरात्रों से उनका एक वर्ष होता है। इस वर्ष से बारह हजार वर्षों का एक चतुर्युग होता है। एक हजार चतुर्युग से ब्रह्मा का एक दिन होता है। उतने की ही एक रात होती है। इसी अहोरात्र से ३६० दिनों का एक वर्ष और इसी वर्ष से सौ वर्षों की आयु ब्रह्मा की है।

इसी ब्राह्म मान से सौ वर्ष बीत जाने पर ब्रह्मा के अपवर्ग के समय में संसार में अनेक स्थानों में बार-बार शरीरादि धारण से 'खिन्न' गर्भवासादि अनेक दुःखों से दुःखी जीवों को रात में विश्राम देने के लिये, अर्थात् कुछ समय तक उक्त दुःखों से उन्हें छुटकारा देने के लिये 'सकलभुवनपति' सभी स्थानों में अबाधित शक्तिवाले महेश्वर की 'सञ्जिहीर्षा' अर्थात् नाश करने की इच्छा होती है। उसी के समान काल में अर्थात् उसके बाद शरीर, इन्द्रिय और महाभूतों के 'उपनिबन्धक' अर्थात् उत्पादक सभी जीवों में समवाय सम्बन्ध से रहनेवाले अदृष्टों का 'वृत्तिनिरोध' अर्थात् कार्यों को उत्पन्न करने का सामर्थ्य प्रतिरुद्ध हो जाता है। सामर्थ्य के उक्त प्रतिरोध से भविष्यत् शरीर, इन्द्रिय और अन्य महाभूतों की उत्पत्ति रुक जाती है, एवं उत्पन्न शरीरादि के विनाश के लिये महेश्वर की इच्छा, आत्मा एवं अणुओं के संयोग इन सबों से क्रियाओं की उत्पत्ति होती है। महेश्वर की यह इच्छा 'सञ्जिहीर्षा' रूप है। कथित 'अणु'

## प्रशस्तपादभाष्यम्

**सति महेश्वरेच्छात्माणुसंयोगजकर्म्मभ्यः शरीरेन्द्रियकारणाणुविभागेभ्य-स्तत्संयोगनिवृत्तौ तेषामापरमाण्वन्तो विनाशः। तथा पृथिव्युदकज्वलन-**

कुण्ठित हो जाती है। उसके बाद महेश्वर की इच्छा, और आत्मा एवं परमाणुओं के संयोग से उत्पन्न क्रिया के द्वारा शरीर और इन्द्रिय के उत्पादक परमाणुओं में विभाग उत्पन्न होते हैं। उन विभागों से (शरीर और इन्द्रिय के आरम्भक परमाणुओं के) संयोगों का नाश होता है। फिर (शरीरादि) कार्य द्रव्यों का परमाणु पर्यन्त विनाश हो जाता है। इसी प्रकार पृथिवी, जल, तेज और वायु इनमें आगे-आगे के रहते

## न्यायकन्दली

**संयोगाश्चेति विग्रहः। तेभ्यो जातानि तेभ्यो महेश्वरेच्छात्माणुसंयोगजकर्म्मभ्यः। शरीराणामिन्द्रियाणां ये पारम्पर्येण कारणभूता अणवस्तेषु विभागा भवन्ति। विभागेभ्यस्तेषामणूनां संयोगनिवृत्तिः। संयोगनिवृत्तौ सत्यां तेषामापरमाण्वन्तो विनाशः। तेषां शरीरेन्द्रियाणां द्व्यणुकादिविनाशप्रक्रमेण तावद्विनाशो यावत्पर-माणुरिति।**

**प्रजानामकाण्डे संहरन्नयमकारुणिको यत्किञ्चनकारी च स्यादिति यत्केनचिदुक्तं तत्रेयं प्रतिक्रिया—प्राणिनां निशि विश्रामार्थमिति। यदप्येतदुक्तम्—"अनन्तानामात्मनामनन्तेष्वदृष्टेषु क्रमेण परिपच्यमानेषु केचिददृष्टक्षयाद् भोगादुपरमन्ते भुञ्जते च केचित्। अपरे तु भोगाभिमुखा**

शब्द से परमाणु समझना चाहिये। 'महेश्वरेच्छात्माणुसंयोगेभ्यः' इस समस्त वाक्य के विग्रह का यह स्वरूप है कि "महेश्वरस्येच्छा महेश्वरेच्छा, महेश्वरस्येच्छा चात्माणुसंयोगा-श्च महेश्वरस्येच्छात्माणुसंयोगाः, तेभ्यो जातानि कर्म्माणि महेश्वरेच्छात्माणुसंयोगकर्म्माणि, तेभ्यो महेश्वरस्येच्छात्माणुसंयोगजकर्म्मभ्यः" अर्थात् महेश्वर की इच्छा एवं आत्मा और परमाणुओं के संयोग इन दोनों से उत्पन्न कर्मों के द्वारा शरीर और इन्द्रियों के कारण अणुओं में परस्पर विभाग उत्पन्न होते हैं। इन विभागों से परमाणुओं के (द्व्यणुका-रम्भक) संयोगों का नाश होता है। संयोगों के नाश से शरीर और इन्द्रिय का 'आपरमाण्वन्त' विनाश हो जाता है। अर्थात् शरीरादिनाश की यह क्रिया द्व्यणुकनाश पर्यन्त चलती है।

प्रजा के इस अकारण विनाश से कोई-कोई परमेश्वर में अकरुणा और स्वेच्छाचार का दोष लगाते हैं, उन्हीं को समझाने के लिये 'प्राणिनां निशि विश्रामार्थम्' यह वाक्य है। किसी की आपत्ति थी कि संहार का उक्त क्रम ठीक नहीं है, क्योंकि जीव अनन्त है, प्रत्येक जीव में अदृष्ट भी अनन्त हैं। वे सभी अदृष्ट क्रमशः ही भोगों को उत्पन्न करेंगे। अतः कोई जीव अदृष्टनाश के कारण अगर भोग से निवृत्त होगा (अथवा एक ही जीव एक अदृष्ट के भोग से निरस्त होगा), कोई जीव (अथवा वही जीव) वर्त्तमान

## प्रशस्तपादभाष्यम्

**पवनानामपि महाभूतानामनेनैव क्रमेणोत्तरस्मिन्नुत्तरस्मिन् सति पूर्वस्य पूर्वस्य विनाशः। ततः प्रविभक्ताः परमाणवोऽवतिष्ठन्ते धर्म्माधर्म्म-संस्कारानुविद्धा आत्मानस्तावन्तमेव कालम्।**

हुये पहिले पहिले का विनाश होता है। उसके बाद उतने ही समय तक (ब्राह्म मान से सौ वर्ष पर्यन्त) अपने में परस्पर असम्बद्ध परमाणु एवं धर्म, अधर्म और संस्कार से युक्त जीव ही रह जाते हैं।

## न्यायकन्दली

**इत्येवं सर्वत्र विषयप्रवृत्तौ न शरीरादीनां युगपदभावो घटते" इति, तदनेन परा-हतम्—अदृष्टानां वृत्तिप्रतिबन्ध इति। ब्रह्मणोऽपवर्गकाले निशीत्युक्तम्। तत्र सर्वप्राणिनां प्रबोधप्रत्यस्तमयसाधर्म्येणोपचारात्। महाभूतानामप्येवं विनाश इत्याह—तथेति। यथा शरीरेन्द्रियाणामापरमाण्वन्तो विनाशस्तथा महाभूताना-मप्यनेनैव क्रमेणेति। परमाणुक्रियाविभागादिक्रमेणोत्तरस्मिन्नुत्तरस्मिन् सति पूर्वस्य पूर्वस्य विनाश इति। जले तिष्ठति पूर्वं पृथिव्या विनाशः, तेजसि तिष्ठति जलस्य, वायौ तिष्ठति तेजस इत्यर्थः। ततः प्रविभक्ताः परमाणवोऽवतिष्ठन्ते धर्म्माधर्म्मभावनाख्यसंस्कारैरनुविद्धा उपगृहीताश्चात्मानस्तावन्तमेव कालं**

फल के प्रति उन्मुख अदृष्ट से भोग करता ही रहेगा, अथवा किसी अदृष्ट में आगे फल देने की उन्मुखता ही उत्पन्न होगी। इस प्रकार के सभी कालों के विषयों में प्रवृत्त रहने के कारण शरीरादि सभी विषयों का विनाश एक काल में नहीं हो सकता, किन्तु 'अदृष्टानां वृत्तिप्रतिबन्धे' इस वाक्य से उक्त आपत्ति का समाधान हो जाता है, क्योंकि ईश्वर की संहारेच्छा से सभी अदृष्टों की कार्यजननशक्ति एक ही समय में कुण्ठित हो जावेगी। 'निशि' शब्द से लक्षणावृत्ति के द्वारा ब्रह्मा के मोक्ष का काल कहा गया है। जैसे कि रात में सोने पर प्राणियों के जाग्रत अवस्था के सभी सुखदुःखादि नष्ट हो जाते हैं, उसीं तरह उस समय भी जीवों के सभी सुख दुःखादि नष्ट हो जाते हैं, यही सादृश्य इस लक्षणावृत्ति का मूल है। शरीरों और इन्द्रियों की तरह और भी सभी भूत नष्ट होते हैं, यही 'तथा' इत्यादि पंक्ति से कहते हैं। अर्थात् जैसे शरीरों और इन्द्रियों का परमाणुपर्यन्त विनाश होता है, उसी प्रकार और उसी क्रम से अन्य महाभूतों का भी विनाश होता है। पहिले परमाणुओं में क्रिया, फिर उनमें परस्पर विभाग इत्यादि कथित क्रम से पूर्व पूर्व का विनाश होता है, अर्थात् जल के रहते हुये पृथिवी का विनाश, एवं तेज के रहते हुये जल का विनाश और वायु के रहते हुये तेज का विनाश होता है। इसके बाद परस्पर असम्बद्ध परमाणु, एवं धर्म, अधर्म, भावनाख्य संस्कार इन तीन गुणों से युक्त जीव ये ही 'उतने समय तक' अर्थात् ब्रह्मा के

## प्रशस्तपादभाष्यम्

ततः पुनः प्राणिनां भोगभूतये महेश्वरसिसृक्षानन्तरं सर्वात्मगतवृत्तिलब्धादृष्टापेक्षेभ्यस्तत्संयोगेभ्यः पवनपरमाणुषु कर्म्मोत्पत्तौ तेषां परस्परसंयोगेभ्यो द्व्यणुकादि-

फिर जीवों के भोग सम्पादन के लिये महेश्वर को सृष्टि करने की इच्छा उत्पन्न होती है। तब सभी आत्माओं के अदृष्ट की कुण्ठित शक्ति कार्यों के उत्पादन के लिये फिर से उन्मुख हो जाती है। कार्य में उन्मुख अदृष्ट एवं आत्मा और परमाणुओं के संयोग से वायु के परमाणुओं में क्रिया उत्पन्न होती है। फिर क्रिया से

## न्यायकन्दली

ब्रह्मणो वर्षशतमेवावतिष्ठन्ते। दिगादयोऽपि तिष्ठन्ति नित्यत्वात्। किन्त्वात्मनामदृष्टवशात् परमाणवः पुनर्नारप्स्यन्त इति। प्राधान्याददृष्टवशादात्मपरमाण्ववस्थानसंकीर्त्तनम्।

एवं संहारक्रमं प्रतिपाद्य सृष्टिक्रमं प्रतिपादयन्नाह— ततः पुनरिति। यद्यपि तदा आत्मनां प्राणसम्बन्धो नास्ति, तथापि प्राणिन इत्युक्तं योग्यत्वात्। तेषां भोगभूतये सुखदुःखानुभवोत्पत्तये महेश्वरस्य सिसृक्षा सर्जनेच्छा जायते। तदनन्तरं सर्वेष्वात्मसु गता अदृष्टा वृत्तिं लभन्ते। यद्यपि युगपदुत्पद्यमानासंख्येयकार्योत्पत्तौ व्याप्रियमाणा दिगादिवन्नित्यत्वादेकैवेश्वरेच्छा क्रियाशक्तिरूपा, तथाप्येषा तत्तत्कालविशेषसहकारिप्राप्तौ कदाचित् संहारार्था भवति,

सौ वर्षों तक रहते हैं। यद्यपि दिगादि पदार्थ भी नित्य होने के कारण उस समय रहते ही हैं, तथापि जीवों के अदृष्ट (की अक्षमता) से ही परमाणु अपने काम को नहीं करते, अतः प्रधान होने के कारण अदृष्टों से युक्त जीव और परमाणुओं की अवस्थिति का ही वर्णन किया है।

इस प्रकार संहारक्रम का प्रतिपादन करने के लिये 'ततः पुनः' इत्यादि लिखते हैं। यद्यपि उस समय के जीवों में प्राण का सम्बन्ध नहीं है, तथापि प्राणसम्बन्ध की योग्यता के कारण 'प्राणिनः' पद का प्रयोग किया है। प्राणियों की 'भोगभूति' अर्थात् सुख और दुःख के अनुभव के लिये महेश्वर को 'सिसृक्षा' अर्थात् सृष्टि करने की इच्छा होती है। इसके बाद जीवों के सभी अदृष्टों में कार्यों को उत्पन्न करने की क्षमता आ जाती है। यद्यपि ईश्वर की असंख्य कार्यों की उत्पत्ति में व्यापृत इच्छा उनकी क्रियाशक्ति रूप है, एवं दिगादि पदार्थों की तरह नित्य होने के कारण एक ही है, फिर भी तत्तत्काल रूप सहकारी को पाकर वही कभी संहार का कारण होती है और कभी सृष्टि का कारण होती है। जब वह सृष्टि का कारण होती है, तब जीवों

## प्रशस्तपादभाष्यम्

**प्रक्रमेण महान् वायुः समुत्पन्नो नभसि दोधूयमानस्तिष्ठति । तदनन्तरं तस्मिन्नेव वायावाप्येभ्यः परमाणुभ्यस्तेनैव क्रमेण महान् सलिलनिधि-**

उत्पन्न परमाणुओं के संयोगों के द्वारा द्व्यणुकादि क्रम से महान् वायु उत्पन्न होकर आकाश में अत्यन्त वेग से युक्त होकर रहती है। उसके बाद उसी क्रम से उसी वायु में जलीय परमाणुओं से उत्पन्न महान् जलराशि सर्वत्र प्लावित होकर रहता है।

## न्यायकन्दली

**कदाचित् सृष्टयर्था भवति । यदा संहारार्था तदा तदनुरोधाददृष्टानां वृत्तिनिरोध औदासीन्यलक्षणो जायते । यदा त्वसौ सृष्टयर्था भवत्तदा वृत्तिलाभः स्वकार्य्य-जननं प्रति व्यापारो भवति । वृत्तिर्लब्धा यैस्ते वृत्तिलब्धा इति । आहि-ताग्न्यादित्वान्निष्ठायाः पूर्वनिपातः, दन्तजात इति यथा । सर्वात्मगताश्च वृत्तिलब्धाश्चादृष्टाश्च तानपेक्षन्ते ये तत्संयोगा आत्माणुसंयोगास्तेभ्यः पवन-परमाणुषु कर्म्माण्युत्पद्यन्ते । पवनपरमाणवः समवायिकारणम् । लब्धवृत्त्य-दृष्टवदात्मपरमाणुसंयोगोऽसमवायिकारणम् । अदृष्टं निमित्तकारणम् । एवं कर्म्मोत्पत्तौ तेषां पवनपरमाणूनां परस्परसंयोगा जायन्ते । तत्संयोगेभ्यश्च द्व्यणुकान्युत्पद्यन्ते । तदनु त्र्यणुकानीत्यनेन क्रमेण महान् वायुः समुत्पद्यमानो नभसि आकाशे दोधूयमानः क्वचिदप्रतिहतत्वाद् वेगातिशययुक्तस्तिष्ठति ।**

के अदृष्ट कार्यक्षम हो जाते हैं और अपने-अपने कार्यों के प्रति व्यापारशील हो जाते हैं। जब ईश्वर की इच्छा संहार का कारण होती है, तब अदृष्टों में कार्यों के प्रति उदासी-नता रूप 'वृत्तिनिरोध' हो जाता है। 'वृत्तिर्लब्धा यैस्ते वृत्तिलब्धाः' इसी आशय का समास 'वृत्तिलब्ध' पद में है। यद्यपि निष्ठाप्रत्ययान्त 'लब्ध' शब्द का प्रयोग पहिले चाहिये, किन्तु आहिताग्निगण में पठित शब्द के साथ समस्त निष्ठाप्रत्ययान्तपद का पूर्वप्रयोग विकल्प से होता है, जैसे कि 'दन्तजातः' इत्यादि स्थलों में, तदनुसार ही 'वृत्तिलब्ध' शब्द का प्रयोग भी है। 'सर्वात्मगतवृत्तिलब्धादृष्टापेक्षेभ्यः' इस समस्त महावाक्य का विग्रहवाक्य यों है कि 'सर्वात्मगताश्च, वृत्तिलब्धाश्च, अदृष्टाश्च तान-पेक्षन्ते ये तत्संयोगास्तेभ्यः'। 'तत्संयोग' अर्थात् आत्मा और अणुओं का संयोग। इन संयोगों से वायवीय परमाणुओं में क्रिया उत्पन्न होती है। इस क्रिया के समवायिकारण हैं वायु के परमाणु, असमवायिकारण हैं वृत्तिलब्ध अदृष्ट से युक्त आत्मा और परमाणुओं का संयोग, एवं अदृष्ट निमित्तकारण है। इस प्रकार परमाणुओं में क्रिया की उत्पत्ति हो जाने पर इन वायवीय परमाणुओं में फिर संयोगों की उत्पत्ति होती है। इन संयोगों से द्व्यणुकों की उत्पत्ति होती है, उसके बाद त्र्यसरेणु की। इस क्रम से महान् वायु उत्पन्न

## प्रशस्तपादभाष्यम्

रुत्पन्नः पोप्लूयमानस्तिष्ठति । तदनन्तरं तस्मिन्नेव पार्थिवेभ्यः परमाणुभ्यो महापृथिवी संहतावतिष्ठते । तदनन्तरं तस्मिन्नेव महोदधौ तैजसेभ्योऽणुभ्यो द्व्यणुकादिप्रक्रमेणोत्पन्नो महांस्तेजोराशिः केनचिदनभिभूतत्वाद्देदीप्यमानस्तिष्ठति ।

एवं समुत्पन्नेषु चतुर्षु महाभूतेषु महेश्वरस्याभिध्यानमात्रात् तैजसेभ्योऽणुभ्यः पार्थिवपरमाणुसहितेभ्यो महदण्ड-

इसके बाद इसी जलनिधि में उसी क्रम से पार्थिव परमाणुओं के द्वारा कठिन स्वभाव का पार्थिव द्रव्य उत्पन्न होकर रहता है। एवं उसी जलनिधि में तैजस परमाणुओं से महान् तेज उत्पन्न होकर किसी से प्रतिहत न होने के कारण अत्यन्त दीप्ति से युक्त होकर विद्यमान होता है।

इस प्रकार चारों महाभूतों के उत्पन्न होने पर केवल महेश्वर के संकल्प से ही पार्थिव परमाणुओं से सहायप्राप्त तैजस परमाणुओं से महान् (हिरण्मय)

## न्यायकन्दली

तदनन्तरं तस्मिन्नेव वायावाप्येभ्यः परमाणुभ्यः, तेनैव क्रमेण द्व्यणुकादिक्रमेण, महान् सलिलनिधिरुत्पन्नः पोप्लूयमानः प्रतिरोधकाभावात् सर्वत्र प्लवमानस्तिष्ठति । तदनन्तरं जलनिधेरुत्पत्त्यनन्तरम्, तस्मिन्नेव जलधौ पार्थिवेभ्यः परमाणुभ्यो महापृथिवी संहता स्थिरस्वभावावतिष्ठते । तदनन्तरं तस्मिन्नेव महोदधौ तैजसेभ्योऽणुभ्यो द्व्यणुकादिप्रक्रमेणोत्पन्नो महांस्तेजोराशिः केनचिदनभिभूतत्वाद्देदीप्यमानस्तिष्ठति । यद्यपि पयःपावकयोः स्वाभाविको विरोधस्तथाप्यदृष्टवशेनाधाराधेयभावो नानुपपन्नः ।

होकर किसी से बाधित न होने के कारण अत्यन्त वेग से युक्त होकर रहती है। उसी महान् वायु में जलीय परमाणुओं से 'उसी क्रम से' अर्थात् द्व्यणुकादि क्रम से जल की महान् निधि उत्पन्न होकर किसी से प्रतिरुद्ध न होने के कारण सर्वत्र प्लावित रहती है। तदनन्तर अर्थात् इस जलनिधि के उत्पन्न होने पर जल के उसी समुद्र में पार्थिव परमाणुओं से कठिन स्वभाव की महापृथिवी उत्पन्न होकर स्थित रहती है। तदनन्तर उसी जलनिधि में तैजस परमाणुओं से द्व्यणुकादि क्रम से महान् तेज का समूह किसी से अभिभूत न होने के कारण अतिशय दीप्ति से युक्त होकर विद्यमान रहता है। यद्यपि जल और तेज इन दोनों में स्वभावतः विरोध है, तथापि जीवों के अदृष्ट से उनमें भी आधाराधेयभाव होता है।

## प्रशस्तपादभाष्यम्

मारभ्यते । तस्मिंश्चतुर्वदनकमलं सर्वलोकपितामहं ब्रह्माणं सकलभुवनसहितमुत्पाद्य प्रजासर्गे विनियुङ्क्ते । स च महेश्वरेण विनियुक्तो ब्रह्मातिशयज्ञानवैराग्यैश्वर्य्यसम्पन्नः प्राणिनां कर्म्मविपाकं विदित्वा कर्म्मा-

पिण्ड की उत्पत्ति होती है । उसी तैजस पिण्ड में (महेश्वर) कमल के सदृश चार मुंह वाले ब्रह्मा को उत्पन्न कर प्रजा की सृष्टि के लिये नियुक्त करते हैं । विलक्षण ज्ञान, उत्कट वैराग्य और अभूतपूर्व ऐश्वर्य से सम्पन्न, एवं परमेश्वर के द्वारा नियुक्त वह ब्रह्मा प्राणियों के कर्म की परिणति को समझकर कर्मों के अनुरूप ज्ञान, भोग,

## न्यायकन्दली

एवम् अनन्तरोक्तेन प्रक्रमेणोत्पन्नेषु महाभूतेषु महेश्वरस्य अभिध्यानमात्रात् सङ्कल्पमात्रात्, तैजसेभ्यः परमाणुभ्यः पार्थिवपरमाणुसहितेभ्यो महदण्डं महद् बिम्बमारभ्यते । बिम्बारम्भे पार्थिवा अवयवा उपष्टम्भकाः, तेनेदं वह्निपुञ्जप्रायं नाभूत् । तस्मिन्नण्डे चत्वारि वदनकमलानि यस्य तं ब्रह्माणं सर्वलोकपितामहं सर्वेषामेव लोकानामाद्यं पुरुषं समस्तैर्भुवनैः सहोत्पाद्य प्रजानां सर्गे जनने विनियुङ्क्ते त्वमिदं कुर्विति । स च महेश्वरेण विनियुक्तो ब्रह्मातिशयज्ञानवैराग्यैश्वर्य्यसम्पन्नो ज्ञानञ्च वैराग्यञ्चैश्वर्य्यञ्च ज्ञानवैराग्यैश्वर्य्याणि, अतिशयेन ज्ञानवैराग्यैश्वर्य्याणि तैः सम्पन्न उपचितो ज्ञानातिशयात् प्राणिनां धर्म्माधर्म्मौ यथावत् प्रत्येति । वैराग्यान्न पक्षपातेन

'एवम्' अर्थात् द्व्यणुकादि क्रम से महाभूतों के उत्पन्न हो जाने पर महेश्वर के 'अभिध्यान' अर्थात् केवल संकल्प से ही पार्थिव परमाणुओं से सहारा पाये हुये तैजस परमाणुओं से 'महदण्ड' अर्थात् महान् पिण्ड की उत्पत्ति होती है। इस पिण्ड (बिम्ब) की उत्पत्ति में चूंकि पार्थिव परमाणुओं का विशेष सम्बन्ध हैं, अतः यह पिण्ड ( तैजस होने पर भी ) वह्निपुञ्ज सदृश नहीं होता है। उसी पिण्ड में कमल के समान चार मुख वाले 'सर्वलोकपितामह' अर्थात् सभी पुरुषों के आदि पुरुष ब्रह्मा को सकल भुवनों के साथ उत्पन्न कर प्रजाओं को उत्पन्न करने के लिये नियुक्त करते हैं कि 'तुम यह काम करो'। महेश्वर के द्वारा सृष्टि कार्य के लिये नियुक्त वह ब्रह्मा 'अतिशयज्ञानवैराग्यैश्वर्यसम्पन्नः' अर्थात् "ज्ञानञ्च, वैराग्यञ्च, ऐश्वर्यञ्च ज्ञानवैराग्यैश्वर्य्याणि, अतिशयेन ज्ञानवैराग्यैश्वर्य्याणि, तैः सम्पन्नः" इस व्युत्पत्ति के अनुसार उक्त वाक्य का अर्थ है कि वह ब्रह्मा उत्तम ज्ञान, उत्कट वैराग्य और अमित ऐश्वर्य से युक्त हैं। अपने उत्तम ज्ञान के बल से वह प्राणियों के धर्म और अधर्म को ठीक से समझते हैं। उत्कट वैराग्य के प्रभाव से उनकी प्रवृत्ति पक्षपात से दूषित नहीं होती है। अपने अमित ऐश्वर्य

## प्रशस्तपादभाष्यम्

नुरूपज्ञानभोगायुषः सुतान् प्रजापतीन् मानसान् मनुदेवर्षिपितृगणान् मुखबाहूरुपादतश्चतुरो वर्णानन्यानि चोच्चावचानि भूतानि च सृष्ट्वा-शयानुरूपैर्धर्मज्ञानवैराग्यैश्वर्य्यैः संयोजयतीति ।

और आयु से युक्त 'सुत' अर्थात् प्रजापतियों की एवं 'मानस' अर्थात् मनु, देवर्षि और पितृगणों की सृष्टि करते हैं । एवं अपने मुंह से ब्राह्मणों को, बाहु से क्षत्रियों को, जङ्घा से वैश्यों को और पैर से शूद्रों को उत्पन्न करते हैं । इसी प्रकार और भी छोटे बड़े अनेक प्राणियों को उत्पन्न कर के सभी को कर्मों के अनुरूप धर्म, ज्ञान, वैराग्य और ऐश्वर्य के साथ सम्बद्ध करते हैं ।

## न्यायकन्दली

प्रवर्त्तते, ऐश्वर्य्यात् कर्म्मफलं भोजयति । प्राणिनां कर्म्मविपाकं विदित्वेति । विविधेन प्रकारेण पाको विपाकः, कर्म्मणां विपाकः कर्म्मविपाकः, तं विदित्वा एतावदस्य कर्म्मफलं भविष्यतीति ज्ञात्वा, कर्म्मानुरूपाणि ज्ञानभोगायूंषि तान् सुतान् प्रजापतीन् दक्षादीन् मानसान् मनःसङ्कल्पप्रभवान् मनु-देवर्षिपितृगणान् मनून्, देवान्, ऋषीन्, पितृगणान् । मुखबाहूरुपादतश्चतुरो वर्णान् मुखाद् ब्राह्मणान्, बाहुभ्यां क्षत्रियान्, ऊरुभ्यां वैश्यान्, पद्भ्यां शूद्रान्, अन्यानि चोच्चावचानि क्षुद्रक्षुद्रतराणि च भूतानि सृष्ट्वा, आशयानुरूपैः आशेते फलोपभोगकालं यावदात्मन्यवतिष्ठत इत्याशयः कर्म्म, तदनुरूपैर्धर्म्मज्ञान-वैराग्यैश्वर्य्यैः, संयोजयति यस्य यथाविधं कर्म्म तत्तदनुरूपेण ज्ञानादिना सम्यग् योजयति, मात्रयाऽप्यन्यथा न करोतीत्यर्थः ।

के बल से वह प्राणियों के कर्म का भोग सम्पन्न कर सकते हैं । 'प्राणिनां कर्म्मविपाकं विदित्वा', 'विविधेन प्रकारेण पाको विपाकः' इस व्युत्पत्ति के अनुसार अनेक प्रकार की परिणति 'विपाक' शब्द का अर्थ है । 'कर्म्मणां विपाकः कर्म्मविपाकः' इस व्युत्पत्ति के अनुसार कर्मों की विविध परिणति ही 'कर्मविपाक' शब्द का अर्थ है । कर्मविपाक को समझ कर अर्थात् 'इस जीव के कर्मों का फल इतना होगा' यह समझ कर 'कर्मानुरूपज्ञानभोगायुषः' अर्थात् कर्म के अनुरूप ज्ञान, भोग और आयु से युक्त दक्षप्रजापति प्रभृति पुत्रों को, मन मात्र से उत्पन्न, अत एव मानस पुत्र-रूप मनुओं, देवताओं, ऋषियों और पितरों को उत्पन्न करते हैं । इसी प्रकार मुख, बाहु, जङ्घा, एवं चरणों से क्रमशः ब्राह्मण, क्षत्रिय, वैश्य और शूद्र इन चारों वर्णों को एवं और भी छोटे बड़े जीवों को उत्पन्न करते हैं । 'आशयानुरूपैः' अर्थात् 'आशेते फलोपभोगकालं यावदात्मन्यवतिष्ठन्त इत्याशयाः' इस व्युत्पत्ति के अनुसार फलों के उप-भोग पर्यन्त जो आत्मा में रहे उसे 'आशय' कहते हैं । फलतः कर्म (अदृष्ट) ही 'आशय'

## न्यायकन्दली

यत् खलु केचिदेवमाचचक्षिरे—प्रेक्षावत्प्रवृत्तिरिष्टार्थाधिगमा स्यादनिष्टपरिहारार्था वा, न चेष्टानिष्टप्राप्तिपरिहारावीश्वरे समस्तावाप्तकामे सम्भवतः, तेनास्य जगन्निर्माणे प्रवृत्तिरनुपपन्ना । तत्रोत्तरम्—प्राणिनां भोगभूतय इति । परार्था सिसृक्षायां प्रवृत्तिर्न स्वार्थनिबन्धनेत्यभिप्रायः । नन्वेवं तर्हि सुखमयीमेव सृष्टिं कुर्य्यान्न दुःखशबलां करुणाप्रवृत्तत्वादित्यत्रैष परिहारः—प्राणिनां कर्म्मविपाकं विदित्वेति । परार्थं प्रवृत्तोऽपि न सुखमयीमेव करोति, विचित्रकर्माशयसहायस्य कर्त्तृत्वादित्यर्थः । न चैवं सति करुणाविरोधः, दुःखोत्पादस्य वैराग्यजननद्वारेण परमपुरुषार्थहेतुत्वात् । यदि धर्म्माधर्म्मावपेक्ष्य करोति नास्य स्वाधीनं कर्त्तृत्वमित्यनीश्वरतादोष इत्यस्यायं प्रतिसमाधिः—आशयानुरूपैर्धर्म्मज्ञानवैराग्यैश्वर्य्यैः संयोजयति । स हि सर्वप्राणिनां

शब्द का अर्थ है। उसके अनुरूप धर्म, ज्ञान, वैराग्य और ऐश्वर्य से जीवों को सम्बद्ध करते हैं। अर्थात् जिस जीव का अदृष्ट जिस प्रकार का है, उसीके अनुरूप धर्म, ज्ञान, वैराग्य और ऐश्वर्य इन चारों वस्तुओं से जीवों को उचित रीति से सम्बद्ध करते हैं, इसमें थोड़ा-सा भी इधर-उधर नहीं करते।

इस प्रसङ्ग में किसी की आपत्ति है कि (१) इष्ट वस्तुओं की प्राप्ति एवं (२) अनिष्ट वस्तुओं के परिहार इन दो भेदों से प्रवृत्ति दो ही प्रकार की हैं। महेश्वर को सभी वस्तुयें बराबर प्राप्त ही हैं। उनका अनिष्ट तो कोई है ही नहीं, अतः कारण की अनुपपत्ति से संसार रचना की उनकी प्रवृत्ति ही नहीं हो सकती। इसी आपत्ति का समाधान 'प्राणिनां भोगभूतये' इस वाक्य से दिया है। अभिप्राय यह है कि सृष्टि कार्य में महेश्वर की प्रवृत्ति अपने लिये नहीं है (उक्त कार्यकारणभाव स्वार्थमूलक प्रवृत्ति का है)। (इस पर यह आक्षेप हो सकता है कि) तो फिर वे सुखमयी सृष्टि की ही रचना करते, दुःखबहुल सृष्टि की नहीं, क्योंकि वे करुणा से ही इसमें प्रवृत्त होते हैं। इसी आक्षेप का परिहार 'प्राणिनां कर्म्मविपाकं विदित्वा' इस वाक्य से किया गया है। कहने का तात्पर्य है कि दूसरों के लिये प्रवृत्त होने पर भी केवल सुखमयी सृष्टि नहीं कर सकते, क्योंकि सुख और दुःख दोनों के जनक 'विचित्र' कर्माशय के साहाय्य से ही उनमें सृष्टि का कर्तृत्व है। ऐसा होने पर भी उनकी स्वाभाविक करुणा में कोई फर्क नहीं आता, क्योंकि वैराग्य के उत्पादन के द्वारा दुःखों का उत्पादन भी परम पुरुषार्थ (मोक्ष) का साधन है। अगर सृष्टि कार्य के लिये उन्हें भी जीवों के धर्म और अधर्म की अपेक्षा है तो फिर कहना पड़ेगा कि उनमें सृष्टि कार्य के प्रति स्वातन्त्र्य रूप कर्तृत्व नहीं है, फिर उनमें अनीश्वरत्व का दोष अनिवार्य है। इसी आक्षेप का समाधान 'आशयानुरूपैर्धर्मज्ञानवैराग्यैश्वर्य्यैः संयोजयति' इस वाक्य से किया है। अभिप्राय है कि

## न्यायकन्दली

कर्म्मानुरूपं फलं प्रयच्छन् कथमनीश्वरः स्यादिति भावः। नहि योग्यतानुरूप्येण भृत्यानां फलविशेषप्रदः प्रभुरप्रभुर्भवति।

कल्पादावुत्पन्नानां प्राणिनां सर्वशब्दार्थेष्वव्युत्पन्नानां सङ्केतस्याशक्यकरणत्वाच्छाब्दव्यवहारानुपपत्तिरिति चोदनायां प्रत्यवस्थानबीजमिदम्—मानसानिति। योनिजशरीरो हि महता गर्भवासादिदुःखप्रबन्धेन विलुप्तसंस्कारो जन्मान्तरानुभूतस्य सर्वस्य न स्मरति। ऋषयः प्रजापतयो मनवस्तु मानसा अयोनिजशरीरविशिष्टादृष्टसम्बन्धिनो दृष्टसंस्काराः कल्पान्तरानुभूतं सर्वमेव शब्दार्थव्यवहारं सुप्तप्रतिबुद्धवत् प्रतिसन्दधते, प्रतिसन्दधानाश्च परस्परं बहवो व्यवहरन्ति। तेषां व्यवहारात् तत्कालवर्त्तिनां प्राणिनां व्युत्पत्तिः, तद्व्यवहाराच्चान्येषामित्युपपद्यते व्यवहारपरम्परया शब्दार्थव्युत्पत्तिरित्यर्थः।

किं पुनरीश्वरसद्भावे प्रमाणम्? आगमस्तावदनुमानञ्च। महाभूतचतुष्टयमुपलब्धिमत्पूर्वकं कार्य्यत्वाद् यत्कार्य्यं तदुपलब्धिमत्पूर्वकं यथा घटः कार्य्यञ्च महाभूतचतुष्टयं तस्मादेतदप्युपलब्धिमत्पूर्वकम्। प्रमाणेन

सभी जीवों को अपने कर्म के अनुसार फल देते हुये भी वह 'अनीश्वर' क्यों होंगे? क्योंकि योग्यता के अनुसार अपने भृत्यों को फल देते हुए भी स्वामी अप्रभु नहीं होते।

सृष्टि के आदि में उत्पन्न जीव शब्द और अर्थ के व्यवहार से अनभिज्ञ रहते हैं, अतः सृष्टि के आदि में सङ्केत के द्वारा शब्द से होनेवाले व्यवहारों की उपपत्ति नहीं होगी। इसी का समाधान 'मानसान्' इस पद में है। अभिप्राय यह है कि योनिज शरीर के जीवों के संस्कार गर्भवासादि जनित बहुत बड़े दुःखों के भोगने के कारण विलुप्त हो जाते हैं, अतः उन जीवों को दूसरे जन्म में अनुभूत सभी बातों का स्मरण नहीं रहता है। ऋषि, प्रजापति और मनु चूंकि मानस हैं (योनिज नहीं), अतः योनिज शरीर वालों से उनका अदृष्ट विलक्षण है। अत एव उनके सभी संस्कार उद्बुद्ध रहते हैं। वे सोकर उठे हुये व्यक्तियों की तरह दूसरे जन्मों में किये गये शब्द और अर्थों के व्यवहारों को स्मरण कर इस जन्म में भी शब्द और अर्थ का व्यवहार करते हैं। उनके व्यवहार से ही और सभी जीव शब्द और अर्थ के सङ्केत को ग्रहण करते हैं। उन जीवों के व्यवहार से फिर अन्य जीव भी शब्दार्थ व्यवहार को ग्रहण करते हैं। व्यवहार की इस परम्परा से शब्द और अर्थ के सङ्केत का ग्रहण होता है।

(प्र०) ईश्वर की सत्ता में प्रमाण ही क्या है? (उ०) शब्द और अनुमान दोनों ही। (अनुमान इस प्रकार है कि) पृथिवी प्रभृति चारों महाभूत किसी ज्ञानी कर्ता के द्वारा उत्पन्न होते हैं, क्योंकि वे कार्य हैं। कार्य अवश्य ही किसी ज्ञानी कर्ता के

## न्यायकन्दली

पूर्वकोटचनुपलब्धेरसिद्धं पृथिव्यादिषु कार्य्यत्वमिति चेत् ? तदयुक्तम्, सावयवत्वात्, यत्सावयवं तत्कार्य्यं यथा घटः सावयवञ्च पृथिव्यादि तस्मादेतदपि कार्य्यमेव । ननु व्याप्तिग्रहणादनुमानप्रवृत्तिः, कार्य्यत्वबुद्धिमत्पूर्वकत्वयोश्च व्याप्तिग्रहणमशक्यम्, घटादिषु कर्तृप्रतीतिकाले एवाङ्कुरादिषूत्पद्यमानेषु तदभावप्रतीतेः । न चाङ्कुरत्वादीनामपि पक्षत्वमिति न्याय्यम्, गृहीतायां व्याप्तावनुमानप्रवृत्तिकाले प्रतिवाद्यपेक्षया पक्षादिप्रविभागः, इह तु सर्वदैव प्रतिपक्षप्रतीत्याक्रान्तत्वाद् व्याप्तिग्रहणमेव न सिद्धयतीत्युक्तम् । अत्र प्रतिविधीयते— यदि चैवं द्वैतानुपलम्भाद् व्याप्तिग्रहणाभावः, तदानीं मीमांसाभाष्यकृदभिमतं सामान्यतोदृष्टमादित्यगत्यनुमानमपि न सिद्धयति, तत्रापि देवदत्तगतिपूर्वकदेशान्तरप्राप्तिग्रहणकाल एव नक्षत्रादिषु देशान्तरप्राप्तिमात्रोपलम्भात् । अथ तेषु

द्वारा उत्पन्न होते हैं, जैसे कि घटादि। पृथिव्यादि चारों भूत भी कार्य हैं, अतः वे सभी भी अवश्य ही ज्ञानी कर्त्ता के द्वारा उत्पन्न हैं। (प्र०) किसी भी प्रमाण से 'पूर्वकोटि' अर्थात् पक्षधर्मता का ज्ञान (अर्थात् पृथिव्यादि चारों महाभूतरूप पक्ष में कार्यत्व रूप हेतु का निश्चयात्मक ज्ञान) नहीं है, उक्त पक्ष में कार्यत्व हेतु सिद्ध नहीं (होने के कारण कार्यत्व हेतु स्वरूपासिद्ध ) है। (उ०) प्रकृत में कार्यत्व हेतु स्वरूपासिद्ध नहीं है, क्योंकि पक्ष रूप चारों महाभूतों के सावयव होने के कारण उक्त सावयवत्व हेतु से उनमें कार्यत्व हेतु सिद्ध है, क्योंकि जितने भी सावयव हैं वे सभी कार्य हैं, जैसे कि घटादि। पृथिव्यादि चारों महाभूत भी सावयव हैं, अतः वे भी अवश्य ही कार्य हैं। (प्र०) व्याप्तिज्ञान से ही अनुमान की प्रवृत्ति होती है, किन्तु उपलब्धिमत्कर्तृजन्यत्वरूप प्रकृत साध्य की व्याप्ति का ज्ञान कार्यत्वरूप हेतु में सम्भव नहीं है, क्योंकि घटादि में उक्त साध्य और हेतु के दोनों की प्रतीति काल में ही अङ्कुरादि में उक्त साध्य के अभाव के साथ कार्यत्व हेतु के सामानाधिकरण्य की भी अबाधित प्रतीति होती है। (उ०) अङ्कुर तो पक्ष के अन्तर्गत है[1] ? (प्र०) इस कथन में कोई सार नहीं है, क्योंकि व्याप्ति के ज्ञात हो जाने के बाद अनुमान की प्रवृत्ति होती है। उस प्रवृत्ति काल में प्रतिवादी की आकांक्षा के अनुसार पक्ष साध्यादि विभाग प्रवृत्त होते हैं। यहां तो हेतु में साध्याभाव के सामानाधिकरण्य के ज्ञान से व्याप्ति का ज्ञान ही असम्भव है। (उ०) इसके समाधान में कहना है कि अगर इस प्रकार हेतु और साध्य के सामानाधिकरण्य की अनुपलब्धि से व्याप्ति का ज्ञान न हो तो मीमांसाभाष्यकार का अभिमत सामान्यतोदृष्ट अनुमान का सूर्य की गति वाला उदाहरण ही असङ्गत हो जायगा, क्योंकि जिस समय यह ज्ञान उत्पन्न होता है कि 'देवदत्त का दूसरे देश के

१. अर्थात् 'नहि पक्षे पक्षसमे वा व्यभिचारो दोषावायकः' इस न्याय से पक्षान्तर्गत अङ्कुर में व्यभिचार का उद्भावन अनुमिति का प्रतिरोध नहीं कर सकता।

## न्यायकन्दली

देशविप्रकर्षेणापि गतेरनुपलब्धौ सम्भवन्त्यां न तया व्याप्तिग्रहणहेतोर्निरुपाधिप्रवृत्तस्य भूयोदर्शनस्य प्रतिरोधः, तुल्यकक्ष्यत्वाभावात् । एवञ्चेत्, अत्राशरीरत्वेनाभ्युपेतस्य कर्त्तुः स्वरूपविप्रकर्षेणाप्यङ्कुरादिष्वनुपलम्भसम्भवान्न तेन निरुपाधिप्रवृत्तस्य भूयोदर्शनस्य सामर्थ्यमुपहन्यत इति समानम् । अपि च भोः ! किमनुमानेन कर्त्तृमात्रं साध्यते ? पृथिव्यादिनिर्माणसमर्थो वा ? कर्त्तृमात्रसाधने तावदभिप्रेतासिद्धिः, नह्यस्मदादिसदृशः कर्त्ताऽभिप्रेतो भवताम्, न च तेनेदं पृथिव्यादिकार्य्यमर्वाग्दृशा शक्यनिर्माणम्, पृथिव्यादिनिर्माणसमर्थस्तु कर्त्ता न सिद्धयत्यनन्वयात्, अन्वयबलेन हि दृष्टान्तदृष्टकर्त्तृसदृशः सिद्धयतीति । नायं प्रसङ्गः, कर्त्तृविशेषस्याप्रसाधनात्, व्याप्तिसामर्थ्याद् बुद्धिमत्पूर्वकत्वे सामान्ये

साथ सम्बन्ध गति से उत्पन्न होता है, उसी समय नक्षत्रों में केवल दूसरे देशों के साथ सम्बन्ध का ही ज्ञान होता है। इसके लिये अगर यह उत्तर दिया जा सकता है कि नक्षत्र चूंकि बहुत दूर हैं, अतः उनमें दूसरे देशों के साथ सम्बन्ध का ज्ञान होने पर भी गति का ज्ञान नहीं होता है। यहां गति की अनुपलब्धि से व्याप्तिज्ञान के कारण रूप उपाधि से शून्य (गति और देशान्तरसञ्चार) के भूयोदर्शन का प्रतिरोध नहीं हो सकता, क्योंकि (प्रकृत गति की अनुपलब्धि और प्रकृत भूयोदर्शन) दोनों समान-कक्षा के नहीं हैं। (उ०) तो फिर प्रस्तुत विषय में भी कहा जा सकता है कि जिस कार्य का कर्ता शरीरी पुरुष होता है, उस कर्ता के शरीर में प्रत्यक्ष की योग्यता रहने के कारण उसके कार्यों में भी कर्तृजन्यत्व की प्रतीति होती है, किन्तु प्रस्तुत महाभूतादि की सृष्टि के कर्ता महेश्वर को तो शरीर नहीं है, अतः ईश्वर रूप कर्तृजन्य अङ्कुरादि कार्यों में कर्तृजन्यत्व की प्रतीति नहीं होती है। किन्तु इसका यह अर्थ नहीं कि अङ्कुरादि कार्यों में कर्तृजन्यत्व है ही नहीं। तस्मात् कोई अनुपपत्ति नहीं है। (प्र०) और भी बात है। अनुमान से आप क्या साधन करना चाहते हैं? केवल कर्ता? या पृथिवी प्रभृति उक्त महाभूतों के निर्माण में समर्थ कर्ता? केवल कर्ता की सिद्धि से तो आपका अभीष्ट सिद्ध नहीं होगा, क्योंकि हम लोगों के समान अल्पज्ञ कर्ता की सिद्धि आपको उस अनुमान से इष्ट नहीं है, एवं हम लोगों के समान अल्पज्ञ पुरुष पृथिव्यादि का निर्माण कर भी नहीं सकता है। उक्त अनुमान से पृथिव्यादि के निर्माण में समर्थ कर्ता की सिद्धि हो ही नहीं सकती, क्योंकि इस विशेष प्रकार का कर्तृजन्यत्व कहीं उपलब्ध नहीं है। अन्वय (हेतु में साध्य का सामानाधिकरण्य) के बल से दृष्टान्त में जिस प्रकार के कर्तृजन्यत्व रूप साध्य की उपलब्धि होगी, पक्ष में भी उसी प्रकार के साध्य की सिद्धि होगी। घटादि रूप दृष्टान्तों में तो पृथिव्यादि निर्माण में समर्थ कर्ता का जन्यत्व उपलब्ध नहीं है। (उ०) उक्त आपत्ति ठीक नहीं है, क्योंकि विशेष प्रकार के कर्ता की सिद्धि अनुमान से इष्ट नहीं है, क्योंकि व्याप्ति के बल से पृथिव्यादि के किसी बुद्धियुक्त कर्ता की सिद्धि हो

## न्यायकन्दली

साध्यमाने पृथिव्यादिनिर्माणसामर्थ्यलक्षणोऽपि विशेषः सिद्धयत्येव, निर्विशेषस्य सामान्यस्य सिद्धयभावात्। ननु मा सिद्धयतु सामान्यमिति चेन्न, कार्य्यत्वेन सह तद्व्याप्तेरप्रतिक्षेपत्वात्। यदि हि व्याप्तमपि न सिद्धयति, धूमादप्यग्निसामान्यं न सिद्धयेत्, अग्निविशेषस्यानन्वितस्यासिद्धेः, निर्विशेषस्यानवस्थानात्।

अथेदमुच्यते—द्वयमनुमानस्य स्वरूपं व्याप्तिः पक्षधर्म्मता च, तत्र व्याप्तिसामर्थ्यात् सामान्यं सिद्धयति, पक्षधर्म्मताबलेन चाभिप्रेतो विशेषः पर्वताद्यवच्छिन्नवह्निलक्षणात्मा सिद्धयति। अन्यथा पक्षधर्म्मतायाः क्वोपयोगः, क्व चानुमानस्य गृहीतग्राहिणः प्रामाण्यम्? एवञ्चेत्, ईश्वरानुमानेऽपि तुल्यम्, अन्यत्राभिनिवेशात्। अथ मतम्, सिद्धयत्यनुमाने विशेषोऽपि यत्र प्रमाणविरोधो नास्ति। तथा हि—धूमात्पर्वतनितम्बवृत्तिवह्निविशेषसिद्धौ का नामानुपपत्तिः? दृष्टो हि देशकालादिभेदः स्वलक्षणानाम्। ईश्वरानुमाने तु विशेषो न सिद्धयति, प्रमाणविरोधात्। तथा हि—नात्र शरीरपूर्वकत्वं साधनीयम्, शरीरे सत्यवश्यमिन्द्रियप्राप्तावतीन्द्रियोपादानोपकरणादिकारकशक्तिपरिज्ञानासम्भवे सति कर्तृत्वासम्भवात्।

जाने पर पृथिव्यादि में उनके निर्माण में समर्थ कर्तृजन्यत्वरूप विशेष की सिद्धि स्वतः हो जायगी, क्योंकि विशेषों से रहित सामान्य की सिद्धि सम्भव नहीं है। (प्र०) सामान्य की भी सिद्धि न हो? (उ०) नहीं, क्योंकि कार्यत्व में कर्तृजन्यत्व की व्याप्ति है, इसमें कोई गड़बड़ नहीं है। अगर व्याप्ति के रहने पर भी सामान्य की सिद्धि न हो तो फिर धूम से वह्नि सामान्य की भी सिद्धि नहीं होगी।

अगर यह कहें कि अनुमान के दो रूप हैं—व्याप्ति और पक्षधर्मता। इनमें व्याप्ति के बल से सामान्य की सिद्धि होती है और पक्षधर्मता के बल से विशेष की सिद्धि होती है। अगर पक्षधर्मता से विशेष का नियमन न हो तो उसका उपयोग ही क्या है? एवं ज्ञातज्ञापक हो जाने के कारण अनुमान में प्रामाण्य ही कैसे हो? (उ०) अगर यह न्याय है तो फिर ईश्वरानुमान में भी यही न्याय है, अगर आप को कोई विशेष आग्रह न हो। अनुमान से विशेषों की सिद्धि वहीं होती है, जहां उसके विरुद्ध कोई प्रमाण उपस्थित नहीं रहता। जैसे कि पर्वत के मूल में वह्निविशेष की सिद्धि होती है। देश और काल के भेद से विशेषों का असाधारण्य प्रत्यक्ष से सिद्ध है। इसमें कौन-सी अनुपपत्ति है? किन्तु उक्त अनुमान से पृथिव्यादि के निर्माण में समर्थ कर्ता की सिद्धि का तो विरोधी प्रमाण है, क्योंकि इससे पृथिव्यादि महाभूतों के शरीरी कर्ता की सिद्धि तो आपको इष्ट नहीं है; क्योंकि इससे ईश्वर का शरीर एवं उनकी इन्द्रियां माननी पड़ेंगी और इन सबों से सब गुड़ गोबर हो जायगा, क्योंकि इन्द्रियादि से युक्त कर्ता में महाभूतों के अतीन्द्रिय परमाणु रूप उपादानों में कार्योत्पादन शक्ति का ज्ञान सम्भव

## न्यायकन्दली

अशरीरपूर्वकत्वञ्चाशक्यसाधनम्, सर्वोऽपि कर्त्ता कारकस्वरूपमवधारयति, तत इच्छतीदमहमनेन निर्वर्त्तयामीति, ततः प्रयतते, तदनु कायं व्यापारयति, ततः कारणान्यधितिष्ठति, ततः करोति, अनवधारयन्ननिच्छन्नप्रयतमानः कायमव्यापारयन् न करोतीत्यन्वयव्यतिरेकाभ्यां बुद्धिवच्छरीरमपि कार्य्योत्पत्तावुपायभूतम् । निखिलोपाधिग्रहणे व्याप्तिग्राहकप्रमाणादेवावधारितं न शक्यते प्रहातुं वह्नेरिवेन्धनविकारसामर्थ्यं धूमानुमाने, तत्परित्यागे च बुद्धिरपि परित्यज्यताम् । प्रभावातिशयादशरीरवदबुद्धिमानेवायमीश्वरः करिष्यति । उपादानोपकरणादिस्वरूपानभिज्ञो न शक्नोतीति चेत् ? कुत एतत् ? तथानुपलम्भादिति चेत् ? फलितं ममापि मनोरथद्रुमेण, न तथा यावदिच्छा प्रयत्नव्यवहिता कार्य्योत्पत्तावुपयुज्यते यथेदमव्यवहितव्यापारं शरीरम् ।

नहीं है, एवं उसके बिना कर्तृत्व ही असम्भव है यह सिद्ध करना तो बिलकुल ही असम्भव है कि ये महाभूत उस कर्ता से उत्पन्न होते हैं, जिनके शरीर नहीं हैं। क्योंकि कर्ताओं का यह स्वभाव है कि वे पहिले उपादानों के स्वरूप को जानते हैं। फिर यह इच्छा होती है कि इन उपादानों से अमुक कार्य को उत्पन्न करें। इसके बाद वे तदनुकूल प्रयत्न करते हैं। फिर अपने शरीर को उस कार्य के अनुसार संचालित करते हैं। इन सबों के बाद कार्य के उपकरणों को यथावत् परिचालित कर कार्य को उत्पन्न करते हैं। विना उपादान निश्चय के, उस कार्य की इच्छा न रखते हुये, उस कार्य विषयक प्रयत्न के बिना ही, शरीर को हिलाये डुलाये बिना कोई भी कर्ता किसी भी कार्य को उत्पन्न नहीं कर सकता। इस अन्वय और व्यतिरेक से बुद्धि की तरह शरीर में भी कारणता सिद्ध है। व्याप्ति की प्रतिबन्धक उपाधियों की खोज के बाद भी जिस हेतु में जिस साध्य की व्याप्ति गृहीत होती है, उस हेतु से साध्य के ज्ञान को कोई रोक नहीं सकता है। जैसे कि आर्द्रेन्धन प्रभव वह्निरूप उपाधि से युक्त होने के कारण धूम की सिद्धि नहीं होती है। इस प्रकार शरीर में सिद्ध कारणत्व का भी अगर परित्याग करें तो बुद्धि को भी छोड़िये। ईश्वर अगर अतिशय प्रभाव के कारण बिना शरीर के भी महाभूतों को उत्पन्न कर सकते हैं तो फिर बिना बुद्धि के भी उन कार्यों का सम्पादन कर सकते हैं। (प्र०) उपादान एवं और कारणों से अनभिज्ञ कर्ता से किसी कार्य का उत्पादन सम्भव नहीं है, (अतः बुद्धि को भी कार्यों का कारण मानते हैं)। (उ०) यह आपने कैसे समझा ? (प्र०) स्थूल घटादि कार्यों में यह देखा जाता है कि वे उपादानादि कारणों के ज्ञान से युक्त कर्ता से ही उत्पन्न होते हैं। (उ०) तो फिर हमारे मनोरथ के वृक्ष भी फल गये, क्योंकि जिस प्रकार किसी विषय की इच्छा रहने पर भी अगर उस विषय का प्रयत्न नहीं रहता है तो कार्य

## न्यायकन्दली

एवं तर्हि का गतिरत्र बुद्धिमत्कर्तृपूर्वकत्वसामान्यस्य ? अगतिरेव, उभयोरपि शरीरित्वाशरीरित्वविशेषयोरनुपपत्तेः, निर्विशेषस्य सामान्यस्य सिद्धचभावात् । किमनुमानस्य दूषणम् ? न किञ्चित्, पुरुष एवायं विशेषाभावाच्छशविषाणायमाने साधनानर्हे सामान्ये साधनं प्रयुञ्जानो निगृह्यते, यथा कश्चिन्निशितं कृपाणमच्छेद्यमाकाशं प्रति व्यापारयन् । अथानुमानदूषणं विना न तुष्यति भवान्, तदिदमशरीरिपूर्वकत्वानुमानं व्याप्तिग्राहकप्रमाणबाधितत्वात् कालात्ययापदिष्टम्, व्याप्तिबलेन चाभिप्रेतमशरीरित्वविशेषं विरुन्धद् विशेषविरुद्धम्, ततश्च विरुद्धावान्तरविशेष एवेति पूर्वपक्षसङ्क्षेपः ।

अत्र प्रतिसमाधिः—किं शरीरित्वमेव कर्तृत्वमुत परिदृष्टसामर्थ्यकारकप्रयोजकत्वम् ? न तावच्छरीरित्वमेव कर्तृत्वम्, सुषुप्तस्योदासीनस्य च कर्तृत्व-

नहीं होता है, उसी प्रकार शरीरव्यापार के बिना केवल प्रयत्न से भी कार्य नहीं होता ।

( प्र० ) कथित अनुमान से पृथिव्यादि महाभूतों में सिद्ध बुद्धिविशिष्टकर्तृजन्यत्व की क्या गति होगी ? (उ०) कोई भी गति नहीं, (क्योंकि बुद्धिमत्कर्तृजन्यत्वरूप ) सामान्य के विशेषभूत शरीरिकर्तृजन्यत्व और अशरीरिकर्तृजन्यत्व इन दोनों में से किसी भी विशेष की सिद्धि नहीं होगी । एवं विशेषों से शून्य सामान्य की सिद्धि भी सम्भव नहीं है । ( प्र० ) उस सामान्य विषयक अनुमान में दोष क्या है ? (उ०) कोई भी दोष नहीं है, चूंकि विशेषों में से किसी की भी सिद्धि नहीं है, अतः आकाशकुसुमप्रतिम ईश्वर ही साधन के अयोग्य है । अतः अनुमान के द्वारा ईश्वर का साधन करनेवाला पुरुष उसी प्रकार विफल होगा, जैसे कि किसी भी प्रकार से न खण्डित होनेवाले आकाश की तरफ कृपाण को उछालने वाला व्यक्ति विफल हो जाता है । अगर आपको बिना हेत्वाभासों के सुने सन्तोष न हो तो फिर उन्हें भी सुनिये । अशरीरिकर्तृजन्यत्व में फलित उक्त अनुमान व्याप्तिग्राहक प्रमाणों से बाधित होने के कारण 'कालात्ययापदिष्ट' नाम के हेत्वाभास से दूषित है । एवं व्याप्ति के बल से ही अशरीरिकर्तृजन्यत्वरूप विशेष की सिद्धि हो सकती है, किन्तु 'कर्ता शरीरयुक्त ही होता है' विशेष प्रकार की इस व्याप्ति से भी उक्त अनुमान दूषित होता है, जो वस्तुतः विरुद्ध नाम से प्रसिद्ध हेत्वाभास का ही एक प्रभेद है । इतना ही उक्त ईश्वरानुमान के विषय में आक्षेप करने वाले पूर्वपक्षियों का आशय है ।

( उ० ) अब हमें इन सब आक्षेपों के समाधान में यह पूछना है कि शरीर का सम्बन्ध ही कर्तृत्व है ? या जिन कारणों में कार्य करने का सामर्थ्य ज्ञात

## न्यायकन्दली

प्रसङ्गात्, किन्तु परिदृष्टसामर्थ्यकारकप्रयोजकत्वम्, तस्मिन् सति कार्य्योत्पत्तेः। तच्चाशरीरस्यापि निर्वहति यथा स्वशरीरप्रेरणायामात्मनः। अस्ति तत्राप्यस्य स्वकर्म्मोपार्जितं तदेव शरीरमिति चेत्? सत्यमस्ति, परं प्रेरणोपायो न भवति, स्वात्मनि क्रियाविरोधात्। प्रेर्य्यतयाऽस्तीति चेत्? ईश्वरस्यापि प्रेर्य्यः परमाणुरस्ति। ननु स्वशरीरे प्रेरणाया इच्छाप्रयत्नाभ्यामुत्पत्तेरिच्छाप्रयत्नयोश्च सति शरीरे भावादसत्यभावाद् अस्ति तस्य स्वप्रेरणायामिच्छाप्रयत्नजननद्वारेणोपायत्वमिति चेन्न, तस्येच्छाप्रयत्नयोरुपजननं प्रत्येव कारकत्वात्, लब्धात्मकयोरिच्छाप्रयत्नयोः प्रेरणाकरणकाले तु तदनुपायभूतमेव शरीरं कर्म्मत्वादिति व्यभिचारः, अनपेक्षितशरीरव्यापारस्येच्छाप्रयत्नमात्रसचिवस्यैव चेतनस्य कदाचिदचेतनव्यापारं प्रति सामर्थ्यदर्शनात्, बुद्धिमदव्यभिचारि तु कार्य्यत्वमितीश्वरसिद्धिः। इच्छाप्रयत्नोत्पत्तावपि शरीरमपेक्षणीयमिति चेत्? अपेक्षतां

हो गया है, उन्हें उचित रूप से परिचालित करना ही कर्तृत्व है? अगर शरीर सम्बन्ध को ही कर्तृत्व मानें तो फिर सोये हुये व्यक्ति में एवं कार्यों से उदासीन व्यक्ति में भी कर्तृत्व मानना पड़ेगा। अतः उक्त प्रकार के कारणों को परिचालित करना ही कर्तृत्व है, क्योंकि उचित रूप से उन्हें परिचालित होने पर ही कार्य की उत्पत्ति होती है। यह दूसरे प्रकार का कर्तृत्व शरीर सम्बन्ध के बिना भी सम्भव है, जैसे कि अपने शरीर के लिये जीव का। (प्र०) यहां भी अपने पूर्व कर्मों से उपार्जित उसी शरीर का सम्बन्ध जीव को अपने शरीर को प्रेरित करने में सहायक है? (उ०) यह ठीक है कि जीव में शरीर का सम्बन्ध है, किन्तु अपने शरीर की क्रिया से अपने शरीर में प्रेरणा नहीं हो सकती। (प्र०) फिर भी यहां प्रेरणा का आश्रय तो है? (उ०) ईश्वर की प्रेरणा के लिये भी परमाणु रूप आश्रय तो है ही। (प्र०) इच्छा और प्रयत्न से अपने शरीर में प्रेरणा उत्पन्न होती है। इन दोनों में भी शरीर अपेक्षित है ही। इस प्रकार अपने शरीर की प्रेरणा में भी अपने शरीर की अपेक्षा होती है। (उ०) शरीर केवल इच्छा और प्रयत्न का ही कारण है, अपने कारणों से उत्पन्न इच्छा एवं प्रयत्न इन दोनों से प्रेरणा की उत्पत्ति होती है। प्रेरणा में शरीर कारण नहीं है, क्योंकि शरीर प्रेरणा रूप क्रिया का कर्म है। इस प्रकार यह नियम ही गलत हो जाता है कि कर्तृत्व शरीर युक्त द्रव्यों में ही रहता है, क्योंकि शरीरव्यापार की अपेक्षा न रखते हुए भी केवल इच्छा और प्रयत्न की सहायता से ही चेतन में जड़ वस्तुओं को व्यापृत करने का सामर्थ्य कहीं कहीं देखा जाता है। कार्यत्व और बुद्धिमत्कर्तृजन्यत्व दोनों अव्यभिचारी हैं, अतः उक्त अनुमान से ईश्वर की सिद्धि होती है। (प्र०) (महाभूतादि सृष्टि के प्रयोजक

## न्यायकन्दली

यत्र तयोरागन्तुकत्वम्, यत्र पुनरिमौ स्वाभाविकावासाते तत्रास्यापेक्षणं व्यर्थम् । न च बुद्धीच्छाप्रयत्नानां नित्यत्वे कश्चिद् विरोधः । दृष्टा हि रूपादीनां गुणानामाश्रयभेदेन द्वयी गतिः—नित्यतानित्यता च । तथा बुद्धचादीनामपि भविष्यतीति । सेयमीश्वरवादे वादिप्रतिवादिनोः पराकाष्ठा । अतः परं प्रपञ्चः ।

आत्माधिष्ठिताः परमाणवः प्रवर्त्तिष्यन्त इति चेन्न, तेषां स्वकर्म्मोपार्जितेन्द्रियगणाधीनसंविदां शरीरोत्पत्तेः (विना) सर्वविषयावबोधविरहात् । अस्त्यात्मनामपि सर्वविषयव्यापि सहजचैतन्यमिति चेन्न, सहजं शरीरसम्बन्धभाजां तत् केन विप्लुतं येनेदं सर्वत्रापूर्ववदवभासयति । शरीरावरणतिरोधानात् तदात्मन्येव समाधीयते, न बहिर्मुखं भवतीति चेत् ? व्यापकत्वेन तस्य विषयसम्बन्धानुच्छेदेन नित्यत्वेन च विषयप्रकाशस्वभावस्यानिवृत्तौ का तिरोधानवाचोयुक्तिः ? वृत्तिप्रतिबन्धश्चैतन्यतिरोधानमिति चेत् ? कथं तर्हि शरीरिणां विषयग्रहणम् ? क्वचिदस्य

ईश्वरीय ) इच्छा और प्रयत्न के लिये भी शरीर की आवश्यकता होगी ? (उ०) इच्छा और प्रयत्न जहां आगन्तुक गुण हैं, वहां शरीर की आवश्यकता भले ही हो, जहां ये दोनों स्वाभाविक गुण हैं, वहां शरीर की अपेक्षा व्यर्थ है । बुद्धि, इच्छा और प्रयत्न इन सबों का नित्यत्व भी युक्ति विरुद्ध नहीं है, क्योंकि आश्रय के भेद से रूपादि गुणों की नित्यत्व और अनित्यत्व दोनों प्रकार की गति देखी जाती है । अतः बुद्धचादि भी जीव और ईश्वर रूप आश्रयों के भेद से नित्य और अनित्य दोनों प्रकार के होंगे । ईश्वर को मानने वाले और न मानने वाले दोनों की इतनी ही युक्तियां हैं, आगे इन्हीं का विस्तार है ।

(प्र०) जीवों की अध्यक्षता में केवल परमाणु ही पृथिव्यादि महाभूतों की सृष्टि करेंगे ? (उ०) उनका ज्ञान अपने कर्मों से उपार्जित इन्द्रियों के अधीन है, अतः महाभूतों की सृष्टि में अपेक्षित सभी विषयों का ज्ञान जीवों में सम्भव नहीं है । (प्र०) जीवों में भी सभी विषयों में व्याप्त चैतन्य की सत्ता तो है ही । (उ०) तो फिर शरीर से युक्त जीवों में उस सहज चैतन्य का विघटन कौन कर देता है ? जिससे कि सभी विषयों को बिना देखी हुई वस्तुओं की तरह देखता है । (प्र०) शरीर रूप आवरण के कारण वह सर्वविषयक सहज चैतन्य जीवों में तिरोहित रहता है, केवल प्रकाशित भर नहीं होता है । (उ०) जीव भी व्यापक है, अतः विषयों के साथ सर्वदा उसका सम्बन्ध रहेगा । जीव नित्य है, अतः विषयों को प्रकाशित करनेवाला स्वभाव भी उसमें बराबर रहेगा । फिर तत्स्वरूप सहज चैतन्य के तिरोभाव में क्या युक्ति है ? (प्र०) कार्य को उत्पन्न करने की शक्ति का नाश ही उसका तिरोभाव है ? (उ) फिर जीवों को विषयों का ज्ञान कैसे होता है ? (प्र०) कहीं उसकी वृत्तियां निरुद्ध नहीं भी होती हैं ? (उ०) ( कहीं वह शक्ति उद्बुद्ध रहती है एवं कहीं तिरोहित ), इस

## न्यायकन्दली

वृत्तयो न निरुध्यन्त इति चेत् ? कुतोऽयं विशेषः ? इन्द्रियप्रत्यासत्तिविशेषाद् यद्येवम्, इन्द्रियाधीनश्चैतन्यस्य विषयेषु वृत्तिलाभो न सन्निधिमात्रनिबन्धनः, सत्यपि व्यापकत्वे सर्वार्थेषु वृत्त्यभावादिन्द्रियवैयर्थ्यप्रसङ्गाच्च (इति) साधूक्तमशरीरिणामात्मनां न विषयाववोध इति।

तथा चैके वदन्ति—"पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात् पराङ् पश्यति नान्तरात्मन्" इति। अनवबोधे च तेषां नाधिष्ठातार इति तेभ्यः परः सर्वार्थदर्शिसहजज्ञानमयः कर्त्तृस्वभावः कोऽप्यधिष्ठाता कल्पनीयः, चेतनमधिष्ठातारमन्तरेणाचेतनानां प्रवृत्त्यभावात्।

स किमेकोऽनेको वा ? एक इति वदामः। बहूनामसर्वज्ञत्वेऽस्मदादिवदसामर्थ्यात्, सर्वज्ञत्वे त्वेकस्यैव सामर्थ्यादपरेषामनुपयोगात्। न च समप्रधानानां भूयसां सर्वदैकमत्ये हेतुरस्तीति कदाचिदनुत्पत्तिरपि कार्य्यस्य स्यात्, एकाभिप्रायानुरोधेन सर्वेषां प्रवृत्तावेकस्येश्वरत्वं नापरेषाम्, मठपरिषदामिव कार्य्यो-

विशेष में क्या युक्ति है ? अगर इन्द्रिय सम्बन्ध रूप विशेष से ऐसा होता है ? (उ०) तो फिर विषय केवल जीवों के समीप रहने के कारण ही उसके सहज चैतन्य के द्वारा प्रतिभासित नहीं होते, क्योंकि व्यापक होने पर भी जीवों को सभी विषयों का ज्ञान नहीं होता है। अगर जीवों में इन्द्रियों से निरपेक्ष भी ज्ञान की सत्ता रहे तो फिर इन्द्रियों की रचना ही व्यर्थ हो जायगी, अतः मैंने पहिले जो कहा है कि 'जीवों को बिना शरीर के विषयों का ज्ञान नहीं होता है' वह ठीक है।

'पराञ्चि खानि' इत्यादि श्रुतियों का अवलम्बन करते हुये कोई कहते हैं कि सभी विषयों का ज्ञान जीवों को नहीं है। सभी विषयों के ज्ञान के विना सृष्टि जैसा कार्य सम्भव नहीं है। सृष्टि रचना के लिये जीवों से भिन्न सहजज्ञान से युक्त कर्त्तृत्वस्वभाव वाले किसी अधिष्ठाता की कल्पना करनी होगी, क्योंकि जड़ वस्तुओं की प्रवृत्ति चेतन अधिष्ठाता के बिना सम्भव ही नहीं है, अतः ईश्वररूप अधिष्ठाता अवश्य हैं।

किन्तु वह एक हैं या अनेक ? इस प्रसङ्ग में हम लोगों का कहना है कि वह एक ही है, क्योंकि अगर ईश्वर अनेक हों एवं सर्वज्ञ हों तो फिर हमलोगों की तरह ही सृष्टिकार्य में असमर्थ होंगे। अगर ईश्वर को अनेक मानकर सभी को सर्वज्ञ मानें, तो फिर एक ही ईश्वर के सामर्थ्य से सृष्टि कार्य की उपपत्ति हो जायगी, अन्य सभी ईश्वरों के सामर्थ्य व्यर्थ जांयगे। एवं एक ही प्रकार के प्राधान्य से युक्त अनेक व्यक्तियों में सर्वदा ऐकमत्य भी नहीं रहता है। अगर एक ही ईश्वर के अभिप्राय से अन्य ईश्वरों की

## न्यायकन्दली

त्पत्त्यनुरोधेन सर्वेषामविरोधे प्रत्येकमनीश्वरत्वम् । तदेवं कार्य्यविशेषेण सिद्धस्य कर्त्तृविशेषस्य सर्वज्ञत्वान्न कुत्रचिद्वस्तुनि विशेषानुपलम्भः । अतो न तन्निबन्धनं मिथ्याज्ञानम्, मिथ्याज्ञानाभावे च न तन्मूलौ रागद्वेषौ, तयोरभावान्न तत्पूर्विका प्रवृत्तिः, प्रवृत्त्यभावे च न तत्साध्यौ धर्म्माधर्म्मौ, तयोरभावात् तज्जयोरपि सुखदुःखयोरभावः, सर्वदैव चानुभवसद्भावात् स्मृतिसंस्कारावपि नासाते इत्यष्टगुणाधिकरणो भगवानीश्वर इति केचित् । अन्ये तु बुद्धिरेव तस्याव्याहता क्रियाशक्तिरित्येवं वदन्त इच्छाप्रयत्नावप्यनङ्गीकुर्वाणाः षड्गुणाधिकरणोऽयमित्याहुः । स किं बद्धो मुक्तो वा ? न तावद् बद्धः, बन्धनसमाज्ञातस्य बन्धहेतोः क्लेशादेरसम्भवात् । मुक्तोऽपि न भवति, बन्धविच्छेदपर्यायत्वान्मुक्तेः । नित्यमुक्तस्तु स्यात्, यदाह तत्रभवान् पतञ्जलिः—"क्लेशकर्म्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" इति ।

भी प्रवृत्ति मानें तो फिर वही ईश्वरपद के मुख्यार्थ होंगे, और बाकी सर्वज्ञ ईश्वर न कहला सकेंगे । अगर कार्यसम्पादन के अनुरोध से अन्य विषयों में मतभेद रहते हुये भी मठ की परिषद के सभासदों की तरह सृष्टिरूप एक कार्य में सभी ईश्वरों का एक मत मानें तो फिर प्रत्येक ईश्वर में अनीश्वरता की आपत्ति होगी । तस्मात् अन्य सभी कार्यों से विलक्षण कार्य द्वारा सिद्ध अन्य सभी कर्ताओं से विशिष्ट सृष्टिरूप कार्य का ईश्वररूप कर्ता एक ही है । चूंकि सर्वज्ञ हैं, किसी भी विषय का कोई भी विशेष उनको अज्ञात नहीं है, अतः विषयों के विशेष के अज्ञान से उत्पन्न होनेवाला मिथ्याज्ञान भी उनमें नहीं है । सुतरां मिथ्याज्ञानमूलक राग और द्वेष भी उनमें नहीं है । इसी हेतु से राग और द्वेष से होने वाली प्रवृत्तियां भी उनमें नहीं हैं । फिर प्रवृत्ति, धर्म और अधर्म की उनमें सत्ता कैसी ? धर्म और अधर्म के न रहने से उनमें सुख एवं दुःख भी नहीं है । सर्वदा सभी विषयों के अनुभव के ही रहने के कारण उनमें स्मृति और संस्कार भी नहीं हैं । इस प्रकार किसी का मत है कि भगवान् परमेश्वर संख्या, परिमाण, पृथक्त्व, संयोग, विभाग, ज्ञान, इच्छा और प्रयत्न इन आठ गुणों से युक्त हैं । किसी विषय में व्याहत न होनेवाला ज्ञान ही उनकी क्रियाशक्ति है । इस प्रकार उनमें इच्छा और प्रयत्न को भी अस्वीकार करते हुये कोई उन्हें छः गुणों का ही आधार मानते हैं । वे बद्ध हैं या मुक्त ? बद्ध तो वे नहीं हैं, क्योंकि बन्धन के कारण क्लेशकर्मादि उनमें नहीं हैं । वे मुक्त भी नहीं हो सकते, क्योंकि 'मुक्ति' और 'बन्धविच्छेद' दोनों शब्द पर्यायवाची हैं । नित्यमुक्त वे हो सकते हैं, जैसा कि भगवान् पतञ्जलि ने 'क्लेशकर्म्मविपाकाशयैः' इत्यादि सूत्र से कहा है ।

## प्रशस्तपादभाष्यम्

**आकाशकालदिशामेकैकत्वादपरजात्यभावे पारिभाषिक्यस्तिस्रः सञ्ज्ञा भवन्ति, आकाशः कालो दिगिति ।**

**तत्राकाशस्य गुणाः शब्दसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागाः ।**

आकाश, काल और दिक् इन तीनों में से प्रत्येक एक एक ही है, अतः उनमें से किसी में (द्रव्यत्व से भिन्न द्रव्यत्व व्याप्य और कोई) भी अपर जाति नहीं है । तस्मात् आकाश,काल और दिक् नाम की उन तीनों की तीन पारिभाषिक संज्ञायें हैं।

इनमें आकाश के शब्द, संख्या, परिमाण, पृथक्त्व, संयोग और विभाग ये छः गुण हैं ।

## न्यायकन्दली

आकाशादीनां त्रयाणां सङ्क्षेपार्थमेकेन ग्रन्थेन वैधर्म्यं कथयति—आकाशकालदिशामिति । आकाशस्य कालस्य दिशश्चैकैकत्वादपरजातिर्नास्ति, तस्या व्यक्तिभेदाधिष्ठानत्वात् । अपरजात्यभावे चाकाश इति काल इति दिगिति तिस्रः संज्ञाः पारिभाषिक्यो न पृथिव्यादिसंज्ञावदपरजातिनैमित्तिक्य इत्यर्थः । संज्ञैषामितरवैधर्म्यं यस्याः संज्ञाया विना निमित्तेन भृङ्गग्राहिकया सङ्केतः सा पारिभाषिकी यथायं देवदत्त इति । यस्याः पुनर्निमित्तमुपादाय सङ्केतः सा नैमित्तिकीति विवेकः ।

सम्प्रति प्रत्येकं निरूपणार्थमाह—तत्राकाशस्य गुणा इति । तेषां त्रयाणां

थोड़े से शब्दों में ही आकाशादि तीनों द्रव्यों का लक्षण कहने के अभिप्राय से 'आकाशकालदिशाम्' इत्यादि एक ही वाक्य से उन सभी के असाधारण धर्म कहे गये हैं । अभिप्राय यह है कि जातियों की कल्पना आश्रयों की विभिन्नता से ही की जाती है, आकाशादि चूंकि एक एक ही हैं, अतः अपर जातियां उनमें न रहने के कारण आकाश, काल और दिक् ये तीनों संज्ञायें पारिभाषिकी हैं । अर्थात् पृथिवीत्वादि अपर जातियों की निमित्तमूलक पृथिव्यादि संज्ञाओं की तरह आकाशादि नैमित्तिक संज्ञायें नही हैं । इन तीनों की ये पारिभाषिकी संज्ञायें ही औरों की अपेक्षा इनका वैधर्म्य हैं । जैसे कि शाम को गोष्ठ के सामने इकट्ठी हुई गायों में से उनका रक्षक अपनी इच्छा के अनुसार किसी एक को पकड़ कर अन्दर कर देता है, उसी प्रकार जो संज्ञा किसी निमित्तविशेष की अपेक्षा न करके किसी व्यक्तिविशेष का बोध करा देती है, वही पारिभाषिकी संज्ञा है, जैसे कि देवदत्तादि संज्ञाएं । जो संज्ञा किसी निमित्तमूलक सङ्केत से स्वार्थ विषयक बोध का उत्पादन करती है, उसे नैमित्तिकी संज्ञा कहते हैं। यही इन दोनों संज्ञाओं में अन्तर है ।

अब इन तीनों में से प्रत्येक का निरूपण करने के लिये 'तत्राकाशस्य गुणाः' इत्यादि वाक्य लिखते हैं । अर्थात् इन तीनों में से आकाश में शब्द, संख्या, परिमाण,

